कस्यचिदिदानीं यस्याम् आदित्यसंयोगो भवन्नस्तीत्यभिसन्धाय प्राचीव्यवहारः, भूतादिति आदिकर्म्मणि क्तप्रत्ययः तेनाभिसन्धेरनियमात् यदाप्यादित्यसंयोगो नास्ति रात्रौ मध्याह्नादौ तत्रापि प्राचीव्यवहारानुगमः सिद्ध्यतीति भावः” उप० वृ०। दिगन्तरव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह “तथा दक्षिणा प्रतीची उदीची च” सू०। “तद्देव दक्षिणदिग्वर्त्तिनगादिना सहादित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताद्वा दक्षिणव्यवहारः एवं प्रतीच्युदीच्योरपि व्यवहार उन्नेयः। वामत्वदक्षिणत्वे निरुक्ते एव” उप० वृ०। दिगन्तरालव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह “एतेन दिगन्तरालानि व्याख्यातानि” सू०। “प्राचीदक्षिणयोर्दिशोर्लक्षणसाङ्कर्य्येण दक्षिणपूर्वा दिगिति व्यवहारः एवं दक्षिणपश्चिमा पश्चिमोत्तरोत्तरपूर्वेत्यूह्यम् एते चादित्यसंयोगा येन विभुना द्रव्येणोपनीयन्ते सा दिगिति कणादरहस्ये व्युत्पादितं विस्तरतः” उप० वृ०। झलि पदान्ते च कुः। दिक्। “दिग्दक्षिणा गन्धवहं मुखेन”। “प्रसन्नदिक् पांशुविविक्तवातम्” कुमा०। सा चोपाधिभेदात् दशधा “पूर्वाग्नेयी दक्षिणा च नैरृती पश्चिमा तथा। वायवी चोत्तरैशानी ऊर्द्ध्वा चाधोदिशोदशेति” वराहपुराणम्। आशाशब्दे तत्तत्त्वे प्रमाणं प्राच्यादिभेदे उपाधिस्वरूपञ्च ८३५ पृ० दर्शितम्। “यया दिशा धावति वेधसः स्पृहा” नैष० “परस्परालापमिवामला दिशः” किरा० शाङ्गुरिमते वा टाप् दिशाप्यत्र। दिशागज दिशापालशब्दे दृश्यम् दिशाश्च यात्राद्युपयोगिसंज्ञाभेदः ज्यो० त० उक्तो यथा “अङ्गारिणी दिग्रविविप्रमुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता। प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः”। “यत्र पूर्वादिकाष्ठायां वृषराश्यादिगो रविः। सा दिगस्तमिता ज्ञेया शेषास्तिस्रः सदोदिताः। यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्ययोः। न कर्त्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः”। “अस्ताशायां स्थितं यस्य नाम्नः प्रथममक्षरम्। स आर्त्तः सर्वकार्य्येषु ज्ञेयो दैवहतो नरः” ज्योति० त० दिक्करशब्दोक्ते २दन्तक्षते च वैजयन्ती ३दशसंख्यायाम् ४तत्संख्यान्विते च। “दिग्भिर्गुणैरष्टयमैः शरैवैः” नील० ता०। ५श्रोत्राधिष्ठातृदेवताभेदे “दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः” शारदातिलकम्। कः प्रजापतिः दिशि भवं दिगा० यत्। दिश्य दिग्भवे त्रि०। दिशा निर्वृत्तम् ठञ्। दैशिक दिक्कृते त्रि० दैशिकपरत्वापरत्वे।

**दिश** त्रि० दिशति दिश—क। १देशके। २विष्णौ पु०। “चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः” विष्णुस०।

**दिशस्** स्त्री दिश—बा० कसुन्। दिशि रमानाथः।

**दिशागज** पु० दिशायां स्थितो गजः। दिग्गजे “नागान् दिशागजसुतान् दिव्यानपि च भारत!” हरिवं० १४५ अ०

**दिशाचक्षुस्** पु० गरुडात्मजभेदे। “वातवेगो दिशाचक्षुर्निमिषोऽनिमिषस्तथा” भा० उ० १०० गरुडपुत्रोक्तौ।

**दिशापाल** पु० दिशां पालयति पालि—अण् उप० स०। इन्द्रादौ १दिक्पाले २ब्रह्मनियोजिते वैराजादिप्रजापतिसुते दिशां पालकभेदे च। दिग्भेदेन तेषां नियोजनकथा हरिवं० ४ अ० यथा “एवं विभज्य राज्यानि क्रमेण स पितामहः। दिशापालानथ ततः स्थापयामास भारत!। पूर्वस्यां दिशि पुत्रन्तु वैराजस्य प्रजापतेः। दिशापालं सुधन्वानं राजानं सोऽभ्यषेचयेत्। दक्षिणस्यां महात्मानं कर्दमस्य प्रजापतेः। पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयेत्। पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम्। केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयेत्। तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः। उदीच्यां दिशि दुर्द्धर्षं राजानं सोऽभ्यषेचयेत्। तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना। यथाप्रदेशमद्यापि धर्मेण परिपाल्यते”।

**दिशोदण्ड** पु० दिशमनादृत्य दण्डः अलुक् स०। दिशोऽनादरेण दण्डे सि० कौ०।

**दिश्य** त्रि० दिशि भवः दिगा० यत्। दिशि भवे। “ये सर्पाः पार्थिवा ये आन्तरिक्षा ये दिव्या ये दिश्यास्तेभ्य इमं बलिमहार्षम्” आश्व० गृ० २।१।९।

**दिष्ट** त्रि० दिश—कर्म्मणि क्त। १उपदिष्टे २कथिते। संज्ञायां कर्त्तरि क्त। ३भाग्ये न० अमरः। “न दिष्टमिष्टं कुरुते न तिष्ठति तु पौरुषे” विष्णुपु०। ४काले पु० अमरः। ५वैवस्वतमनोः पुत्रभेदे। “नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते” भाग० ८।१३।२ वैवस्वतमनुपुत्रकथने। ६दारुहरिद्रायां शब्दमाला

**दिष्टान्त** पु० ६त०। १भाग्यसमाप्तौ तदुपलक्षिते २मरणे च। “ततो दिष्टान्तमापन्नः सर्वेषां दुःखमावहन्” भा० आ० ४९ अ० “दिष्टान्तमाप्स्यति भवानपि पुत्रशोकात्” रघुः

**दिष्टि** स्त्री दिश—भावे क्तिन् संज्ञायां कर्त्तरि क्तिच् वा। १हर्षे २परिमाणे च मेदि०। ३कथने उपदेशे ४उत्सवे “तथाचास्य दिष्टिवृद्धिमिव शुश्राव” काद०। ५भाग्ये च “राजकुले दिष्टिवृद्धिसम्भ्रमो महानभूत्” काद०।

**दिष्ट्या** अव्य० दिश—सम्पदा० भावे क्विप् दिशं देशनं स्त्यायति स्त्यै—ष्ट्यै—वा क्विप्, अन्यत्रादि० नि० वा। १हर्षे २मङ्गले भाग्यार्थकदिष्टिशब्दस्य तृतीयान्तस्य रूपमित्यन्ये तेन शुभागेन्नेत्यर्थः। “अन्योऽन्यगतसौहार्दा दिष्ट्यादिष्ट्येति चाब्रुवन्” भा० आ० १२८अ०

**दिष्णु** त्रि० दा—गिष्णु। दातरि उणादि०।

**दिह** लेपने अदा० उभ० सक० अनिट्। देग्धि दिग्धे अधिक्षत् अधिक्षत-अदिग्ध अधिक्षन्त अदिहत।। दिदेह दिदिहे। देग्धा धेक्ष्यति दिग्धः। “अदिहंश्चन्दनैः शुभैः” भट्टिः। “स चन्दनोशीरमृणालदिग्धः” भट्टिः। उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तलेपने। प्रणिदेग्धि “दन्तास्तपसाभिदिग्धाः” अथ० ५।१८।८ “दन्तरजसावदेग्धि” कौ० त० ब्रा० २१ “कवचैः शोणितादिग्धैः” भा० भी० ३३८४ श्लो० “ऊर्जं वा एतं रसं पृथिव्या उपदीका उद्दिहन्ति यद्वल्मीकम्” तै० आ० ५।२।८ “लोहानां च मणीनां च मलपङ्कोपदिग्धता” काम० नी० “शिरोगलं कफोपदिग्धम्” सुश्रु० “यथाधो भूमौ निदिग्धं तदमुया स्यादेवं तत्” शत० ब्रा० १।७।२।१२

**दी** क्षये दि० आत्म० अक० अनिट्। दीयते अदास्त। दिग्ये अदित् दीनः। उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थक्षये “अध श्येनो जवसा निरदीयम्” ऋ० ४।२७।१ “आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परिदीयन्ति यह्वीः” ऋ० २। ३५।१४

**दीक्ष** मौण्ड्ये यागे उपनयने नियमव्रतयोरादेशे च भ्वा० आ० सक० सेट्। दीक्षते अदीक्षिष्ट। दिदीक्षे दीक्षिष्यते। “दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे” भट्टिः “यज्ञादु ह वा एष पुनर्जायते यो दीक्षते” ऐत० ब्रा० २।२२ “कथं नोमध्येऽदीक्षिष्ट” ऐत० ब्रा० २।१९ “ब्रह्मसत्रेण दीक्षिष्यमाणाः” भाग० ३।१।६ क्वचित् वेदे परस्मैपदम् “ते ह देवयजनं दिदीक्षुः पञ्चवि० ब्रा० २४।१८ णिच्। दीक्षयति “राजानं दीक्षयामासुः सर्पसत्राय्ये तदा” भा० आ० २०१७ श्लो०।

**दीक्षण** न० दीक्ष—भावे ल्युट्। यज्ञाद्यर्थनियमभेदे। “वन्ध मोक्षमखदीक्षणेष्वपि” राजमार्त्तण्डः।

**दीक्षणीय** न० दीक्षणाय हितादि छ। दीक्षासाधने हविर्भेदे। “यो दीक्षते आग्नावैष्णवं हविर्दीक्षणीयं हविर्भवति” शत० ब्रा० ३।२।४।२१। १इष्टिभेदे स्त्री “दीक्षणीयाप्रायणीयातिथ्यदेवता” कात्या० श्रौ० ५।३।१० “दीक्षणीयादीनां द्वकलाजामिष्टीनां सदेवताकानामुपांशुत्वम्” कर्कः “वागन्तेन वा दीक्षणीयां, नीचैस्तरां नीचैस्तरामितरे” कात्या० श्रौ० ७।२।२१ “अथ वा वागन्तेन उत्तमया वाचा उच्चैर्दीक्षणीयां कुर्युः इतरे द्वे इष्टी प्रायणीयातिथ्ये नीचैस्तरां कर्तव्ये, दीक्षणीया उच्चैस्तरां, प्रायणीया तदपेक्षया नीचैस्तरां, तदपेक्षया नीचैस्तरामातिथ्येति” कर्कः। २सौमिके इष्टिभेदे हेम०। ४वाजपेयाङ्गभूते इष्टिभेदे। “वाजपेयाङ्गभूतानां यजतीनां दीक्षणीयाप्रायणीयादीनामादिषु सकृद्गृहीतमाज्यं जुहोति” यजु० ९।५। वेददी०।

**दीक्षा** स्त्री दीक्ष—भावे अ। १नियमे २उपनयनसंस्कारे “दीयते विमलं ज्ञानं क्षीयते कर्मवासना। तेन दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः” इति तन्त्रोक्ते ३अभीष्टदेवमन्त्रग्रहणे ४तदुपदेशे। यागाङ्गदीक्षा च द्वादशसंख्या अपरिमिता वा यथाह कात्या० श्रौ० ७।१।२९सू० “द्वादश दीक्षाः” “अत्राग्निष्टोमे भवन्ति” कर्कः। “अपरिमिता वा” द्वादशसंख्यातोऽतिशयेनाधिकसंख्या वा दीक्षा भवन्ति “अपरिमितं प्रमाणादभूय इति” परिशिष्टकारः अतश्चत्वारो दीक्षापक्षाः, “एका दीक्षा, तिस्रो दीक्षा, द्वादशदीक्षा अपरिमिता वा दीक्षेति” शाखान्तरादेते दीक्षापक्षाः। आपस्तम्बः “दशाहमवरार्ध्यं दीक्षितो भवति मासं संवत्सरं वा यदा कृशः स्यादित्यपरं विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदास्मिन्नन्तर्न किं चन भवत्यथ मेध्यो भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदास्य त्वचास्थि संधीयतेऽथ मेध्यो भवति पीवा दीक्षेत कृशो यजेत यदस्याङ्गानां हीयते जुहोत्येव तदिति विज्ञायते” इति। कर्कः “पुण्याहे दीक्षा क्रयः प्रसव उत्थानम्” ३१सू० “तान्यत्र दीक्षा सोमक्रयः प्रसवः सुत्या उत्थानं समाप्तिः पुण्याहे विष्टिव्यतीपातादिज्योतिःशास्त्रनिषेधवर्जिते सुदिने भवन्ति यतएव स्मरन्ति ‘आभ्युदयिकः पदार्थः पुण्येऽहनि कर्त्तव्यः एतानि चाभ्युदयिकानीति” कर्कः। तान्त्रिकमन्त्रदीक्षाकालादि मल० त० उक्तं यथा “अथ दीक्षाकालः सा च मलमासे न कार्या यथा—ऽगस्त्यसंहितायाम् “यदा ददाति सन्तुष्टः प्रसन्नवदनो गुरुः। अयमेव तथा चैवमिति कर्त्तव्यताक्रमः। विशुद्धदेशकालेषु शुद्धात्मा नियतो गुरुः। सङ्कल्प्यैौषध्र कर्त्तव्यमङ्कुरारोपणं मुने!। कुर्य्यात्सान्द्रोमुखं

आद्यमादौ च स्वस्तिवाचनम्। स्वगृह्योक्तप्रकारेण सदैतद्विदधीत वै। मधुमासे भवेद्दुःखं माधवे रत्नसञ्चयः। मरणं भवति ज्यैष्ठे आषाढ़े बन्धुनाशनम्। सन्ततिः श्रावणे नूनं भवेद्भाद्रपदे क्षयः। प्रजानामाश्विने मासि सर्वतः शुभमेव हि। ज्ञानं स्यात् कार्त्तिके सौख्यं मार्गशीर्षे भवत्यपि। पौषे ज्ञानक्षयो माघे भवेन्मेधाविवर्द्धनम्। फाल्गुनेऽपि विवृद्धिः स्यान्मलमासं विवर्जयेत्। गुरौ रवौ दिने शुक्रे कर्त्तव्यं बुधसोमयोः। अश्विनी भरणी स्वातिविशाखाहस्तभेषु च। ज्येष्ठोत्तरत्रयेष्वेवं कुर्य्यान्मन्त्राभिषेचनम्। शुक्लपक्षे च कृष्णे वा दीक्षा सर्वसुखावहा। पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा। त्रयोदशी च दशमी प्रशस्ता सर्वकामदा। पञ्चाङ्गशुद्धदिवसे सोदये शशितारयोः। गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते। चन्द्रतारानुकूले च शस्यते सर्वकर्मसु। सूर्य्यग्रहणकालेन समानो नास्ति कश्चन। तत्र यद्यत् कृतं सर्वमनन्तफलदं भवेत्। न मासतिथिवारादिशोधनं सूर्य्यपर्वणि। ददातीष्टं गृहीतं यत्तस्मिन् काले गुरोर्मनुम्। सिद्धिर्भवति मन्त्रस्य विनायासेन सेव्यतः"। मनुं मन्त्रम्। अङ्कुरारोपणमागमप्रसिद्धम्। शुद्धकालत्वं दर्शयति मधुमासे इत्यादि। पञ्चाङ्गशुद्धदिवसे तिथिवारनक्षत्रकरणयोगशुद्धदिवसे। तथाच महाकपिलपञ्चरात्रम् "एवं नक्षत्रतिथ्यादौ करणे योगवासरे। मन्त्रोपदेशो गुरुणा साधकस्य शुभावहः"। सोदये शशितारयोरिति जन्मचन्द्राद्यतारयोरानुकूल्यसहिते गुरुशुक्रोदये गुरुशुक्रानस्तमये। एतत्तु समयशुद्ध्यन्तरोपलक्षणम्। (अकालशब्दोक्ते "गुरोर्भृगोरस्तबाल्ये" इत्यादिके वचने "परीक्षारामकूपांश्च पुरश्चरणदीक्षणे" इत्यादिना अशुद्धकाले तस्यावर्ज्यत्वमुक्तम्)। द्वादशशोधिते द्वादशांशशोधिते। ज्ञानमालायाम् "रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा"। तथा "तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कथञ्चन"। दीक्षातत्त्वे "यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः। न तिथिर्न व्रतं होमो न स्नानं न जपः क्रिया। दीक्षायाः कारणं किञ्चित् स्वेच्छयाप्ते तु सद्गुरौ"। सद्गुरौ सिद्धमन्त्रगुरौ। दीपिकायाम् "ध्रुवमृदुनक्षत्रगणे रविशुभवासरेषु सत्तिथौ सद्गुरौ दीक्षा। स्थिरलग्ने शुभचन्द्रे केन्द्रे कोणे शुभे गुरौ धर्मे"। ध्रुवाणि त्रीण्युत्तराणि रोहिणी च। मृदूनि चित्रानुराधामृगशिरोरेवत्यः। केन्द्रं लग्नचतुर्थसप्तदशकम्। कोणं नवपञ्चकम्। धर्म्मो नवमः। वीरतन्त्रे "रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम्। पुष्यः शतभिषगर्कौ च दीक्षानक्षत्रमिष्यते"। अर्को हस्तः। रत्नावल्याम् "योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनो धृतिः। वृद्धिर्ध्रुवः सुकर्म्मा च साध्यः शुक्लश्च हर्षणः। वरीयांश्च शिवः सिद्धो ब्रह्मा इन्द्रश्च षोड़श"। तथा। शुभानि करणानि स्युर्दीक्षायाञ्च विशेषतः। शकुन्यादीनि विष्टिञ्च विशेषेण विवर्जयेत्"। शकुन्यादीनि शकुनिनागचतुष्पदकिन्तुघ्नानि। कृष्णेऽष्टम्यां चतुर्दश्यां पूर्वपक्षदिने तथा"। कृष्णे कृष्णपक्षे। कालोत्तरे "भूतिकामैः सिते सदा" म०त० दीक्षायां प्रतिप्रसवः "राघवभट्टधृतसारसंग्रहे शिष्यर्क्षजन्मदिवसे संक्रान्तौ विषुवायने। सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत्"। तन्तुपर्व परमेश्वरोपवीतदानतिथिः श्रावणी पूर्णिमा। दामनपर्व दमनभञ्जनतिथिश्चैत्रशुक्लचतुर्दशी। कूर्म्मपुराणे हिमालयं प्रति देवीवाक्यम् "यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च। श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी। करालभैरवञ्चापि यामलं वाममाश्रितम्। एवंविधानि चान्यानि मोहनार्थानि तानि तु। मया सृष्टानि चान्यानि मोहायैषां भवार्णवे"। तस्मात् सद्भिः श्रुतिस्मृतिविरुद्धे वर्त्मनि न कदाचित् पदं न्यस्तव्यम्। अर्थादिदुष्टमन्त्रप्रतीकारस्तु "एषु दोषेषु सर्वत्र मायां कामभयापि वा। छित्वा चादौ श्रियं दद्यात् तद्दूषणविमुक्तये। तारसंपुटितो वापि दुष्टमन्त्रो विशुध्यति। यस्य यत्र भवेद्भक्तिः सोऽपि मन्त्रोऽस्य सिद्ध्यति। भुवनेश्वरीपारिजातेऽपि "मायाबीजसमायुक्तः क्षिप्रं सिद्धिप्रदो भवेत्। पिण्डस्तु केवलो मन्त्रो मायाबीजोज्ज्वलीकृतः। मायाबीजात् भवेत् प्राणो बीजञ्चैतन्यवीर्य्यवत्"। नारदीये "यदृच्छया श्रुतं मन्त्रं छद्मनापि छलेन वा। पत्रेक्षितं वा गाथाञ्च तमुपेत्य त्वनर्थकृत्। प्रविश्य विधिवद्दीक्षामभिषेकावसानिकाम्"। अधिकं तन्त्रसारोक्तं देशाद्यनुपदं वक्ष्यते

तन्त्रसारे दीक्षाशब्दस्य व्युत्पत्तिप्रदर्शनपूर्वं तस्यावश्यकता दर्शिता यथा

"दीक्षां विना जपस्य दुष्टत्वात् प्रथमं सा निरूप्यते "दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्ष-

यम्। तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः। दीयते ज्ञानसंभारः क्षालनात् पापसन्ततेः। ततो दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः"। सर्व्वाश्रमेषु दीक्षाया आवश्यकत्वम् तथा च "दीक्षामूलं जपं सर्व्वं दीक्षामूलं परन्तपः। दीक्षामाश्रित्य निवसेत् यत्र कुत्राश्रमे वसन्"। शूद्रस्य निषेधमाह तन्त्रान्तरे "प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्व्वथा। आत्ममन्त्रं गुरोर्मन्त्रं मन्त्रञ्चाजपसंज्ञकम्। स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः। शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम्"। नृसिंहतापनीये "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यद्विजानीयात् स मृतोऽधोगच्छति"। लक्ष्मीं लक्ष्मीमन्त्रम्। विशेषमाह वाराहीतन्त्रे "गोपालस्य मनुर्द्देयो महेशस्यापि पादजे। तत् पत्न्याश्चापि सूर्य्यस्य गणेशस्य मनुस्तथा"।

अदीक्षितस्य निन्दामाह तन्त्रसारे

"अदीक्षिता ये कुर्व्वन्ति जपपूजादिकाः क्रियाः। न भवन्ति प्रिये तेषां शिलायामुप्तबीजवत्। देवि! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः। तस्मात् सर्व्वप्रयत्नेन गुरुणा दीक्षितो भवेत्। अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत्। तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिकात्। कल्पे दृष्ट्वा तु मन्त्रं वै यो गृह्णाति नराधमः। मन्वन्तरसहस्रेषु निष्कृतिर्नैव जायते। नादीक्षितस्य कार्य्यं स्यात् तपोभिर्नियमव्रतैः। न तीर्थगमनेनापि न च शारीरयन्त्रणैः"। अतः सद्गुरोराहितदीक्षः सर्व्वकर्म्माणि साधयेत्। गोविन्दवृन्दावने "अदीक्षितस्य मरणे प्रेतत्वं न विमुञ्चति"। नवरत्नेश्वरः "सर्व्वासामपि दीक्षाणां मुक्तिः फलमखण्डितम्। अविरोधाद्भवन्त्येव प्रासङ्गिक्यस्तु भुक्तयः"। दीक्षा काम्या च यथा कुलार्णवे "उपपातकलक्षाणि महापातककोटयः। क्षणाद्दहति देवेशि! दीक्षा हि विधिना कृता। दीक्षाद्यागमोक्तागमपदार्थमाह यामले "आगतः शिववक्त्रेभ्यो गतश्च गिरिजानने। मतस्तस्या हृदम्भोजे तस्मादागम उच्यते। आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः। न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः। पञ्चवर्णैर्भवेद्दीक्षा ह्यागमोक्तैः शृणु प्रिये!। यां कृत्वा कलिकाले च सर्व्वाभीष्टं लभेन्नरः" तन्त्रसा०

दीक्षाप्रकारस्तु कलावतीशब्दे १७८२ पृ० द्रष्टव्यः।

अन्यत्र च दीक्षाशब्दव्युत्पत्त्यादिकमुक्तं यथा

रुद्रयामले "ददाति शिवतादात्म्यं क्षिणोति च मलत्रयम्। अतो दीक्षेति संप्रोक्ता दीक्षातत्त्वार्थवेदिभिः"। लघुकल्पसूत्रे च "दीयते परमं ज्ञानं क्षीयते पापपद्धतिः। तेन दीक्षोच्यते तन्त्रे स्वागमार्थबलाबलात्"। योगिनीतन्त्रे तृतीयभागे षष्ठपटलेऽपि "दीयते ज्ञानमत्यर्थं क्षीयते पाशबन्धनम्। अतो दीक्षेति देवेशि! कथिता तत्त्वचिन्तकैः। मनसा कर्म्मणा वाचा यत् पापं समुपार्जितम्। तेषां विश्लेषकरणी परमज्ञानदा यतः। तस्माद्दीक्षेति लोकेऽस्मिन् गीयते शास्त्रवेदकैः। विज्ञानफलदा सैव द्वितीया क्षयकारिणी। तृतीया मुक्तिदा चैव तस्माद्दीक्षेति गीयते"। विश्वसारतन्त्रे द्वितीयपटले च "अथ दीक्षां प्रवक्ष्यामि शृणुष्व कमलानने!। यस्य विज्ञानमात्रेण देवत्वं लभते नरः। दिव्यज्ञानं यतो दद्यात् कुर्य्यात्पापक्षयं यतः। तस्माद्दीक्षेति सा प्रोक्ता सर्व्वतन्त्रस्य सम्मता"। अथ दीक्षामाहात्म्यम् रुद्रयामले पूर्व्वखण्डे तृतीयपटले "देवि! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः। तस्मात् सर्व्वप्रयत्नेन गुरुणा दीक्षितो भवेत्। अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत्। तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिकीम्" पञ्चदशपटले "अदीक्षिता ये कुर्व्वन्ति जपपूजादिकाः क्रियाः। न भवन्ति प्रिये! तेषां शिलायामुप्तबीजवत्" कल्पसूत्रटीकाधृतकुलार्णवतन्त्रे "रसेन्द्रेण यथा विद्धमयः सुवर्णतां व्रजेत्। दीक्षाविद्धस्तथैवात्मा शिवत्वं लभते प्रिये!। दीक्षाग्निदग्धकर्म्मासौ पाशाद्विच्छिन्नबन्धनः। गतस्तस्य कर्म्मबन्धो निर्जीवश्च शिवो भवेत्। गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता। दीक्षासंस्कारसंभिन्ने जातिभेदो न विद्यते। शिवलिङ्गे शिलाबुद्धिं कुर्व्वन् यत् पापमाप्नुयात्। दीक्षितस्यापि पूर्व्वत्वं स्मरन् तत् पापमाप्नुयात्। दार्व्वश्मजौहमृद्रत्नजातिलिङ्गं प्रतिष्ठितम्। यथोच्यते तथा शुद्धाः सर्व्वे वर्णाश्च दीक्षिताः। येन पूजितमात्रेण चाब्रह्मभुवनान्तकम्। पूजितं तेन सर्व्वं स्याद्दीक्षितेन न संशयः। नादीक्षितस्य कार्य्यं स्यात्तपोभिर्नियमव्रतैः। न तीर्थगमनेनापि न च शारीरयन्त्रणैः"। पञ्चमखण्डे षष्ठोल्लासेऽपि "गवां सर्पिः शरीरस्थं न करोत्यात्मपोषणम्। स्वकर्म्म रचितं दत्तं पुनस्तामेव पोषयेत्। एवं सर्व्वशरीरस्थं सर्पिर्वत् परमेश्वरी। विना चोपासनाद्देवि! न ददाति फलं नृणाम्"। पुरश्चरणरसोल्लासे प्रथमपटले "न च दीक्षा-

# एतानि मुद्रितसंस्कृतपुस्तकानि ।

आशुबोध व्याकरणम् ३।०
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः ( संस्कृत अभिधान ) १०
४ सिद्धान्तकौमुदी सरला टीका सहिता ११
५ सिद्धान्तविन्दुसार (वेदान्त) ॥
६ तुलादानादिपद्धतिः(वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धतिः १
८ शब्दार्थरत्न ॥।
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥/
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥
१३ रत्नावली सटीक ॥।
१४ मालविकाग्निमित्र सटीक १॥
१५ धनञ्जय विजय सटीक ।
१६ महावीरचरित १॥
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार ॥।
१९ लीलावती ॥।
२० बीजगणित १
२१ शिशुपालबध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २॥
२३ कुमारसम्भव पूर्वखण्ड सटीक ॥।
२४ कुमारसम्भव उत्तरखण्ड ॥
२५ अष्टकम् पाणिनीयम् ॥।
२६ वाचस्पत्यम् (संस्कृत वृहदभिधान ) १२०
२७ कादम्बरी सटीक ४
२८ राजप्रशस्ति /
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४
३० सर्वदर्शनसंग्रह १
३१ भामिनीविलास सटीक १
३२ हितोपदेश सटीक १
३३ भाषापरिच्छेदमुक्तावलीसहित १
३४ बहुविवाहवाद ।
३५ दशकुमारचरित सटीक १॥
३६ परिभाषेन्दुशेखर ॥।
३७ कविकल्पद्रुम धातुपाठः ॥
३८ चक्रदत्त (वैद्यक) २॥
३९ उणादिसूत्र सटीक २
४० मेदिनीकोष १
४१ पञ्चतन्त्रम् ( श्रीविष्णुशर्मणा सङ्कलितम्) २॥
४२ विद्वन्मोदतरङ्गिणी(चम्पूकाव्य)॥
४३ माधवचम्पू ।/
४४ तर्कसंग्रह ( इंराजी अनुवाद सहित) ॥
४५ प्रसन्नराघव नाटक (श्रीजयदेवकवि विरचित) १
४६ विवेकचूड़ामणि ( श्रीमत् शङ्कराचार्य्य कृत) ।/
४७ काव्यसंग्रह (सम्पूर्ण) ५
४८ लिङ्गानुशासन सटीक ।
४९ ऋतुसंहार सटीक ।/
५० विक्रमोर्वशी (सटीक) १॥
५१ वसन्ततिलक भाण ।/
५२ गायत्री व्याख्या ॥
५३ सांख्यदर्शन ( भाष्यसहित ) सांख्य प्रवचन भाष्य २
५४ भोज प्रबन्ध ॥।०
५५ नलोदय सटीक ॥/
५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक भाष्य) ५
५७ छान्दोग्य (उपनिषद्) सभाष्य सटीक ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २
५९ बृहदारण्यक ( उपनिषद् सटीक सभाष्य १०
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशति ॥।०
६३ पातञ्जलदर्शन(सभाष्यसटीक) ४
६४ आत्मतत्त्वविवेक(बौद्धाधिकार)२
६५ सर्वोपनिषत् /
६६ उपमान चिन्तामणि ।०
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् (मध्वस्वामि कृत भाष्य सहितम्) २
६९ चन्द्रशेखरचम्पू काव्य २
७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २
७१ सामवेदस्य आरण्यसंहिता सायणाचार्य्य कृत भाष्यसहिता १
७२ विद्धशालभञ्जिका नाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कारचन्द्रिकाख्य टीका सहित ३
७५ प्रियदर्शिका नाटिका सटीक ( श्रीहर्षविरचित ) ॥
७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।

७७ वासवदत्ता सटीक २

७८ ( कालिदास कृत ) पुष्पवाण-
विलास काव्य सटीक ॥

७९ महिम्न शतकम्, पदारविन्द
शतकम्, स्तुतिशतकम्, मन्द-
स्मितशतकम्, कटाक्षशतकम् १

८० मनुसंहिता कुल्लूकभट्ट कृत
टीका सहित ५

८१ नैषधचरितम् (मल्लिनाथ कृत
टीका सहित) १०

८२ चन्द्रालोक प्राचीन अलङ्कार ॥

८३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०

८५ प्रबोधचन्द्रोदय नाटक सटीक २

८६ अनर्घराघवनाटक(मुरारिकृत) २

८७ दैवतब्राह्मणसभाष्य १

८८ षड्विंशब्राह्मणम् १

८९ मीमांसा परिभाषा ॥०

९० अर्थसंग्रह(लौगाक्षीमीमांसा)॥०

९१ रघुवंश सटीक १॥०

९२ मेघदूत सटीक ॥॥०

९३ ईश्वरनिरूपणम् १

९४ ईश्वरानुमानचिन्तामणि
(गङ्गेशोपाध्याय कृत) १

९५ न्यायदर्शन सभाष्य सवृत्ति २॥०

९६ सटीक वाल्मीकिरामायण
बालकाण्डस्य प्रथमावधि
सप्तषष्टि सर्गपर्य्यन्तम् २

९७ सटीक वाल्मीकिरामायण
बालकाण्डस्य अष्टषष्टि सर्गावधि
सप्त सप्तति सर्ग पर्य्यन्तम् १

९८ मदनपालनिघण्टुः (वैद्यक) १

९९ संस्कृतशिक्षामञ्जरी प्रथमभागः ⁄०

१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः।०

१०१ साहित्यदर्पणम् (अलङ्कार) १॥०

१०२ श्रीहर्षचरित वाणभट्टकृत २

१०३ अमरकोष ॥०

१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत
शारीरकभाष्य तथा गोविन्दा-
नन्द कृत टीका सहित १०

१०५ वेदान्तपरिभाषा १

१०६ वेदान्तसार सटीक १

१०७ सटीक निदान (वैद्यक) ४

१०८ कामन्दकी नीतिसार सटीक १

१०९ ( दण्डिकवि कृत ) मल्लिका-
मारुतप्रकरण सटीक २

११० अत्रि विष्णु, हारीत, याज्ञ-
वल्क्य उशना अङ्गिरा यम आप-
स्तम्ब, संवर्त कात्यायन वृहस्पति
पराशर व्यास शङ्ख लिखित दक्ष-
गौतम शातातप वशिष्ठ प्रणीत
संहिता (धर्मशास्त्र) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता(वैद्यक) सम्पूर्ण १०

११३ रसेन्द्रचिन्तामणि तथा रस-
रत्नाकर (वैद्यक) ६

११४ भगवद्गीता शाङ्करभाष्य आनन्द-
गिरिकृतटीका तथा सुबोधिनीसमेत ५

११५ शब्दशक्तिप्रकाशिका १

११६ मालतीमाधव सटीक १॥०

११७ सटीक भट्टिकाव्य ४

११८ सटीक काव्यप्रकाश ४

११९ सभाष्यशाण्डिल्यसूत्र ॥⁄

१२० लघुकौमुदीव्याकरणम् ॥

१२१ महानाटकम्(हनुमन्नाटक) १

१२२ दशरूपकम् (अलङ्कार) १॥

१२३ भोजचम्पू ( भोजदेव कृत
चम्पूरामायणम्) १

१२४ भारत चम्पू सटीक ४

१२५ मार्कण्डेयपुराणम् ५

१२६ गोलाध्यायः १

१२७ गणिताध्यायः १

१२८ पञ्चदशी (सटीक) २

१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १

१३० शकुन्तलानाटक टीकासहित १

१३१ शब्दरूपादर्श ॥०

१३२ वृहत्संहिता
वा वाराहीसंहिता ४⁄

१३३ तर्कामृत ०

१३४ द्वात्रिंशत् पुत्तलिका ६

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिणः श्रीजीवानन्द विद्यासागर-
भट्टाचार्यस्य सकाशात् लभ्यानि ।